॥ विघ्नविनाशकस्तोत्रम् ॥

ईशानो ढुण्ढिराजो गणपतिरखिलाधौघनाशो वरेण्यो
देवानामग्रण्यः सकलगुणनिधिर्योऽग्रपूजाधिकारी ।
विद्याधीशो बलिष्ठः षडरिविदलनः सिद्धिबुद्धिप्रदाता
जीवानां मुक्तिहेतुर्जयति भवहरः श्रीगुरुः सौख्यसिन्धुः ॥ १॥

विघ्नान्हन्तीति योऽसौ श्रुतिषु निगदितो विघ्नहेतिप्रसिद्धो
व्यक्तेवाऽव्यक्तरूपे प्रणववपुरयं ब्रह्मरूपः स्वमात्रः ।
यो व्यक्तो भक्तहेतुर्निरवधिरमलो निर्गुणो निष्क्रियोपि
भक्तानां मुक्तिहेतौ विदलयति कृतं मायिकस्याद्वयः सः ॥ २॥

सर्पोरज्जुर्हि यद्वन्न भुजग इति सा कथ्यते रज्जुसर्पे
विश्वं ब्रह्मैव तद्वन्न च जगदिति तत्खल्विदं ब्रह्मवाक्ये ।
सत्ता सामान्यरूपात्कथितमपि च यो दृश्यरूपो न तादृक्
दृश्यं यद्विघ्नकृत्स्यात्तदपनयति यो बोधतो विघ्नहाऽयम् ॥ ३॥

सर्वं ब्रह्मस्वरूपं परमपरयुतं विश्वमाभाति यच्च
चैतन्यस्याद्द्वयत्वाद् गदित इति च यो दृश्यरूपोऽप्यरूपः ।
माया तत्सर्वकार्यं जडमिति कथितं यं विनाभावमेति
सर्वत्रावस्थितत्वात्तदनुभव इति स्वादनाद्योऽद्वयः सः ॥ ४॥

भात्यस्त्यानन्दरूपोऽसदसुखजडतारूपदृश्येऽस्ति यो वै
नित्यो नित्यादिकानां भवति किल तथा चेतनश्चेतनानाम् ।
सर्वस्यैतस्य माया-कृतसुखमिह यत् प्रार्थ्यते तद्गणेशो
यस्तं सर्वादिभूतं भजत जगति भोः सारभूतं वरेण्यम् ॥ ५॥

नित्यं यन्निर्विकारं निरतिशयसुखं ब्रह्मतन्मत्स्वरूपं
ज्ञात्वा विश्वातिभूतः सकलविदलयन् स्वार्चिषा स्वस्थ आसे ।
माया तत्कार्य-मेतत्स्पृशति न मयि वा दृश्यते नाऽविरासीन्
मायायाः सर्वशक्तेः पर इति सततं यः स एवाद्वयोऽहम् ॥ ६॥

ब्रह्मानन्दकरोऽयमात्ममतिदः श्रीढुण्ढिराजस्तवो
विघ्नाघौघघनप्रचण्डपवनः कामेभपञ्चाननः ।
मायाव्याकुलप्रमत्तमरुडो मोहाटवीहव्यवाड्
अज्ञानान्धनिवारणैकतरणिर्भेदाब्धिकुम्भोद्भवः ॥ ७॥

इति श्रीभगवता श्रीधरस्वामीना विरचितं
विघ्नविनाशकस्तोत्रं सम्पूर्णम् ॥